# सिद्धशाबरतन्त्रे अक्षर मातृकाः

1 अं ॐ ह्लीं श्रीं अं
अजामुखी रक्तवर्णा हंसगा धवलांशुका।
शरासनं वरं दक्षे धत्ते वामे शराभयौ॥
2 आं ॐ ह्लीं श्रीं आं
आकाराख्याथर्विणीतु श्यामशुक्लाम्बराशुगा।
धत्ते खङ्गञ्च खेटञ्च क्रमेणैव वराभयौ॥
3 इं ॐ ह्लीं श्रीं इं
इकाराख्या त्विलादेवी श्वेता मत्तेभगा शुभा।
चन्द्रहासवरौ दक्षे वामे धत्ते गदाऽभयौ॥
4 ईं ॐ ह्लीं श्रीं ईं
ईश्वरी स्वर्णवर्णाभा वृषारूढा सितांशुका।
शारिकाञ्च वरं दक्षे वामे धत्तेऽङ्कुशाभयौ॥
5 उं ॐ ह्लीं श्रीं उं
उग्रादेवी ह्युकाराख्या षड्भुजा सिंहगा सिता।
दक्षे शूलाङ्कुशवरान् वामे पाशगदाऽभयान्॥
6 ऊं ॐ ह्लीं श्रीं ऊं
ऊकारोर्जस्वलादेवी शार्दूलवरवाहना।
रक्ता चतुर्भुजा धत्ते खङ्गखेट वराभयान्॥
7 ऋं ॐ ह्लीं श्रीं ऋं
ऋतुधामा ऋकाराख्या रक्तवर्णा वृषस्थिता।
दक्षे पाशवरौ धत्ते वामेऽङ्कुशाभयौ॥
8 ॠं ॐ ह्लीं श्रीं ॠं
ॠकाराख्या रेणुकेयं षडास्या षड्भुजा सिता॥
शूलं पाशं वरं दक्षे वामे खङ्गगदाऽभयान्।
दधाना रक्तसिंहस्था क्रूरा लोकभयङ्करी॥

9 ऌं ॐ ह्लीं श्रीं ऌं

ऌतम्भरा ऌकाराख्या श्यामा व्याघ्रवरस्थिता ।
चतुर्मुखाऽष्टहस्तेयं धत्तेऽस्त्राणि करैः परैः ॥
त्रिशूलं पाशडमरुवरान् वामकरैस्तथा ।
खड्गं कपालमुसलाभयान् पीताम्बरा शुभा ॥

10 ॡं ॐ ह्लीं श्रीं ॡं

ॡकारा लञ्जिकाराख्यैषा पुष्पदन्ता गजस्थिता ।
रक्ता दशभुजार्धेन दक्षादि क्रमशः करैः ॥
त्रिशूलं पाशमुसलचन्द्रहासवरान् शुभान् ।
वामैः करैः खड्गखेटगदाशक्त्यभयांस्तथा ॥

11 एं ॐ ह्लीं श्रीं एं

एकाराख्या रेवतीस्यात् दशास्या रुण्डमालिनी ।
रक्ता विंशद्भुजा सिंहवाहना फाललोचना ॥
करैर्धत्ते चक्रशूलपाशखड्गकमण्डलान् ।
अक्षसूत्रञ्च चिन्मुद्रां भुशुण्डीं मुद्गरं वरम् ॥
वामे धत्ते करैश्शङ्खं भिण्डीन्दुमृगखेटकान् ।
कपालं दहनं शेषं दण्डं चैव गदाऽभयौ ॥

12 ऐं ॐ ह्लीं श्रीं ऐं

ऐकाराख्या शुष्कपूर्वा रेवती त्रिशिराहिता ।
मयूरगा षड्भुजेयं रक्तकेशैश्च संवृता ॥
अर्धैर्धत्ते करैश्चक्रं त्रिशूलञ्च वरं तथा ।
वामैः शङ्खं गदां गुर्वीं करैर्धत्तेऽभयं तथा ॥

13 ॐ ॐ ह्लीं श्रीं ओं

ओङ्कारा त्वश्विनीदेवी रक्तवर्णा षडानना ॥
मयूरगाऽर्कबाहुःस्यात् धत्ते कक्षेऽङ्कुशं शरम् ।
खड्गं पाशञ्च चिन्मुद्रां दरञ्च केकरेक्षणा ॥
वामे शूलं कार्मुकञ्च खेटं मुसलमेवच ।
पुस्तकं चाभयं चैव सर्वशत्रुभयङ्करी ॥

14 औं ॐ ह्लीं श्रीं औं
औकाराख्या ह्यघोरेयं कराली दीर्घजिह्विका।
एकवक्त्रा वक्रनेत्रा भ्रुकुटीकुटिलेक्षणा॥
नीलमेघनिभा रौद्री भेरुण्डवरवाहना॥
षड्भुजार्धकरैः धत्ते शूलं खड्गं वरं तथा।
गदाखेटाभयान् वामे दधानाच महोदरी॥
15 अं ॐ ह्लीं श्रीं अं
अञ्जनाभाञ्जनादेवी पञ्चास्या जरठा कृशा।
महोदरी महाव्याघ्रवरवाहनमास्थिता॥
चतुर्भुजा शूलपाश वराभयकरा मता॥
16 अः ॐ ह्लीं श्रीं अः
अःकाराख्या त्वजादेवी त्रिशिराच त्रिलोचना।
रक्तपीताम्बरा क्रूरतरक्षुवरवाहना॥
षड्भुजा शूलपट्टासिवरदानकरान्विता।
वामेऽङ्कुशमहाखेटाभयान् धत्ते करैः क्रमात्॥
17 कं ॐ ह्लीं श्रीं कं
भूतविन्यासिनी शुभ्रगजारूढा चतुर्भुजा।
त्रिशूलञ्च वरं दक्षे वामेऽङ्कुशमथाभयम्॥
18 खं ॐ ह्लीं श्रीं खं
खञ्जरीटस्थिता पीता त्रिशिराच त्रिशूलिनी।
खाख्या खद्योतिनी खड्गवराभयकरा मता॥
19 गं ॐ ह्लीं श्रीं गं
गाख्या धूम्रा चतुर्वक्त्रा सिंहस्थाऽष्टभुजा मता॥
धूम्राभा दक्षिणे धत्ते शूलं पाशं शुकं वरम्।
वामेतु पुस्तकं कुण्डीं कपालमभयं क्रमात्॥
20 घं ॐ ह्लीं श्रीं घं
कृष्णवर्णा घरूपाच सूकरास्या कृशोदरी॥
षड्भुजा शूलखट्वाङ्गवरान् दक्षभुजैः क्रमात्।
वामे खड्गं तथा खेटं अभयं शत्रुभञ्जिनी॥

21 ङं ॐ ह्रीं श्रीं ङं
अनन्तशक्तिर्देवेशी रक्ता बर्हिणवाहना।
षडाननेषुचापासि खेटदानाभयान्विता॥
22 चं ॐ ह्रीं श्रीं चं
सुषुमा चैकवक्त्रेषा हयारूढा चतुर्भुजा।
खड्गखेटधरा चाख्या वराभयकरा शुभा॥
23 छं ॐ ह्रीं श्रीं छं
छनिर्झरारुन्धतीयं पीता मर्कटवाहना।
त्रिशूलं क्षुरिकां पाशं खेटञ्च दधती शुभा॥
24 जं ॐ ह्रीं श्रीं जं
जो भोगदा हि रक्तास्यात् त्रिणेत्रा सिंहवाहना।
चतुर्भुजा खड्गखेट वराभयकरान्विता॥
25 झं ॐ ह्रीं श्रीं झं
झो निर्झरनदीदेवी शरन्मेघनिभाम्बुजा।
पाशं वराभयौ धत्ते नक्रस्था शुभदा नृणाम्॥
26 ञं ॐ ह्रीं श्रीं ञं
ञाख्या प्रबोधिनी शुभ्रा सिंहस्था चित्स्वरूपिणी।
त्रिशूलाम्बुज चिन्मुद्राऽभयान्वितकरा शुभा॥
27 टं ॐ ह्रीं श्रीं टं
टाख्याच धारिणीदेवी शूलटङ्क वराभयान्।
धत्ते मत्तमतङ्गस्था पाटलाभा सितांशुका॥
28 ठं ॐ ह्रीं श्रीं ठं
क्रिया सरस्वती ठाख्या टङ्काङ्कुश वराभयान्।
धत्ते सिंहवरारूढा चैकवक्त्रारुणा मता॥
29 डं ॐ ह्रीं श्रीं डं
डकारिणी पञ्चवक्त्रा सिता टङ्कगदाधरा।
चतुर्बाहुः कुक्कुटस्था वराभयकराच सा॥

30 ढं ॐ ह्लीं श्रीं ढं
ढरूपिणी श्रीधनाख्या पञ्चवक्त्रा मयूरगा ।
तटिद्गौरी करैर्धत्ते शूलटङ्क वराभयान् ॥
31 णं ॐ ह्लीं श्रीं णं
णोऽनन्तशक्तिर्देवेशी रक्ता बर्हिणवाहना ।
एकवक्त्रा शक्ति वराभयकरा शुभा ॥
32 तं ॐ ह्लीं श्रीं तं
ताख्या सरस्वती शुभ्रा सितपद्मानानांशुका ।
एकवक्त्रा करैर्धत्ते वीणा तन्त्री वराभयान् ॥
33 थं ॐ ह्लीं श्रीं थं
पञ्चवक्त्रा सिता थाख्या नीलकण्ठा सरस्वती ।
शारिकां डमरुं धत्ते वृषारूढा वराभयौ ॥
34 दं ॐ ह्लीं श्रीं दं
एकवक्त्रारुणा दाख्याऽष्टभुजा भोगदायिनी ।
धत्तेऽब्जं शारिकां वीणाडमर्वर्ण वराभयान् ॥
35 धं ॐ ह्लीं श्रीं धं
श्यामला चामला धाख्या ह्येकवक्त्रा चतुर्भुजा ।
वृषस्था शारिकामब्जं करैर्धत्ते वराभयौ ॥
36 नं ॐ ह्लीं श्रीं नं
नोऽनन्तशक्तिर्देवेशी मत्तमातङ्गसंस्थिता ।
एकवक्त्रा तटिद्गौरी धत्ते पद्मे वराभयान् ॥
37 पं ॐ ह्लीं श्रीं पं
पाख्येच्छाशक्तिरूपेयं शूलशक्ति वराभयान् ।
धत्ते करैः पञ्चवक्त्रा फुल्लपद्मासनारुणा ॥
38 फं ॐ ह्लीं श्रीं फं
पञ्चवक्त्रोग्रसिंहस्था पाटलातपकोमला ॥
फाख्या शुकैणासिखेट वराभयधराशरान् ।
पाशञ्च डमरुं धत्ते क्रमेण दशभिः करैः ॥

39 बं ॐ ह्लीं श्रीं बं
चिच्छ्यामला बभ्रुवर्णा सिंहारूढा बरूपिणी ।
धत्ते क्रमेण दशभिः करैः पूर्ववदायुधान् ॥
40 भं ॐ ह्लीं श्रीं भं
भारूपा श्यामला चैकवक्त्रा भद्रासने स्थिता ।
उद्यद्रविनिभा धत्ते शरचाप वराभयान् ॥
41 मं ॐ ह्लीं श्रीं मं
मो विद्याश्यामलादेवी हयास्या स्फटिकप्रभा ।
वीणावादनतत्त्वज्ञा वराभयकरा शुभा ॥
42 यं ॐ ह्लीं श्रीं यं
याख्येयं दीपिनीदेवी सिंहस्थाऽष्टभुजा सिता ।
शूलचापेषुपाशासि खेटदानाभयान्विता ॥
43 रं ॐ ह्लीं श्रीं रं
रंरूपा रेचिका श्यामा सिंहस्था लोहितांशुका ॥
पञ्चास्याऽष्टकरैर्धत्ते दक्षवामक्रमेण सा ।
खड्गखेटाङ्कुशगदापाशशूल वराभयान् ॥
44 लं ॐ ह्लीं श्रीं लं
लात्मिका मोहिनीदेवी स्वर्णाभा गजसिंहगा ।
षड्भुजाङ्कुशशूलासि खेटदानाभयान्विता ॥
45 वं ॐ ह्लीं श्रीं वं
वाख्या नारायणीदेवी स्फटिकाभारुणांशुका ।
स्फुटपद्मासना धत्ते पद्मद्वय वराभयान् ॥
46 शं ॐ ह्लीं श्रीं शं
शाख्या मङ्गलगौरीतु तप्तजाम्बूनदप्रभा ।
सहस्रपद्मपीठस्था दिव्याभरणभूषिता ॥
चतुर्भुजा करैर्धत्ते पद्मद्वय वराभयान् ॥
47 षं ॐ ह्लीं श्रीं षं
रक्ताभानुक्रियादेवी राजहंसवरस्थिता ।
पीताम्बरा करैर्धत्ते पद्मद्वय वराभयान् ॥

48 सं ॐ ह्रीं श्रीं सं
सिद्धक्रिया सकाराख्या सिताम्बुजनिवासिनी ।
पाटलाभा करैर्धत्ते चिदम्बुज वराभयान् ॥
49 हं ॐ ह्रीं श्रीं हं
आध्यायिनी हकाराख्या मत्ता मातङ्गवाहना ।
पाटलाभा करैर्धत्ते चिदम्बुज वराभयान् ॥
50 ळं ॐ ह्रीं श्रीं ळं
ळो बन्धमोचिनीदेवी स्वर्णाभा गजसंस्थिता ।
षड्भुजाङ्कुशशूलासि खेटदानाभयान्विता ॥
51 क्षं ॐ ह्रीं श्रीं क्षं
क्षं मायामालिनीदेवी पञ्चाननवरस्थिता ।
पञ्चास्या पाटला धत्ते खड्गशूल वराभयान् ॥



अजा मुखी रक्त वर्णा हंस गाधवला शुक्रा
शशरात कर दक्षे धत्ते वामे शरा भयौ ।।
अं
ॐ ह्रीं श्रीं अं कामरूप पीठाय

